श्रीगुरुर्जयति

# शङ्करो लोकशङ्करः



शि. वे. राधाकृष्ण शास्त्री

संस्कृतश्रीः

२२, वीरेश्वरं अप्रोच् रोड्, श्रीरङ्गम् - ६२०००६

1992

श्रीगुरुर्जयति

# शङ्करो लोकशङ्करः



शि. वे. राधाकृष्ण शास्त्री

संस्कृतश्रीः

२२, वीरेश्वरं अप्रोच् रोड्, श्रीरङ्गम् - ६२०००६

1992

# शङ्करो लोकशङ्करः

## (लघु नाटकम्)

मङ्गलम्

भवान्यै भवायापि मात्रे च पित्रे मृडान्यै मृडायाप्यघघ्न्यै मखघ्ने ।
शिवाङ्ग्यै शिवांगाय कुर्मः शिवायै शिवायांबिकायै नमस्त्र्यंबकाय ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्येतल्लक्षणलक्षित भो ।
सांब सदाशिव शंभो शङ्कर शरणं मे तव चरणयुगम् ॥

तव तत्त्वं न जानामि तदमेयं धिया मम ।
अनीदृशस्त्वं प्रथितस्तादृशे ते गुरो नमः ॥

सूत्रधारः — (प्रविश्य)

महनीयमादिमगुरुं प्रणमाम भक्तिभरिताः ।
गुरुचरणाब्जनावा भवसागरं तरावः ॥

मौनी जटी वटाधःस्थितिमाश्रितो गुरुस्सः ।
मधुरैर्वचोभिरनुगान् दययादिशन्नुपैति ॥

इह शङ्करार्यचरितं भक्त्याभिनेतुकामाः ।
वयमागता हि रंगे कृपया सभाजयन्तु ॥

(निर्गच्छति)

प्रथमं दृश्यम्

(शिवगुरुः आर्यांबा च वृषाचलक्षेत्रे आलयं परिक्रामतः । परस्परं संभाषेते शिवालयद्वारे)

शिवगुरुः — आर्ये ! सफलं जीवनमावयोः । शुभां सन्ततिं प्रेप्सन्तौ श्रीवृषाचलेशं शरणं प्रपन्नौ । दिनानि कतिचिदतीतानि त्रिसन्ध्यं ईशं भजतोः । सर्वज्ञः ईशः । आवयोः मनोरथं पूरयेदित्येव मन्ये ।

आर्या — नियमेन धृत्या च भगवन्तं आराधयति भवान्। स हि भक्तवत्सलः शरण्यश्च। अचिरात्प्रसीदेदित्येव मे दृढः प्रत्ययः।

शिवगुरुः — आर्ये! ईशं भजतः क्रमात् कामाः अपयान्ति इति श्रुतम्। अत्रागतेन मया सर्वोऽपि योगक्षेमभरः भगवति अर्पितः। तेनाहं निभृतं निर्वृतः। तथापि ....

आर्या — किं वा चिन्तयति भवान्?

शिवगुरुः — कोऽपि जीवो मां पितरं कुर्याद्वा? अहं वा तादृशं जीवं जनयितुं किं कृतपुण्यः? न जाने आवयोः भाग्यं कीदृशमिति। ईशः प्रमाणम्।

आर्या — आर्य! लज्जे मम मनोगतं प्रकटयितुम्। ईशः पुत्रमनुगृह्णीयादित्येवास्तु। कीदृशः पुत्र ईप्सितः? लब्धोऽपि स मूढः पण्डितो वा, दीर्घायुरल्पायुर्वा, कीदृशो भवेत्। सर्वज्ञं दीर्घायुषं गुणवन्तं पुत्रं दद्याः इति ईश्वरं प्रार्थितुं के वयम्?

शिवगुरुः — आर्ये! भगवान् आवयोः ईप्सितं जानाति। तस्य अनुग्रहात् तत्तुल्य एव पुत्रो लभ्येत। अथवा – यथा अनुगृह्णाति, तथा गृह्णीवः। यदि सर्वज्ञः गुणवान् अल्पायुर्भवति, सोऽपि वरमेव दीर्घायुषो मूढात्। अथवा आवयोः कोऽधिकारः एवं चिन्तने? रात्रिरत्येति। अत्रैव उपविशावः।
(क्लान्तौ दंपती निद्रावशं गच्छतः। स्वप्ने भगवन्तं वृषाचलेशं पुरतः स्थितं पश्यतः।)

वृषाचलेशः — वत्सौ युवयोः पुत्रो जायेत। सर्वज्ञः प्रथितानुभावः। अष्टभिर्वर्षैः लोकोत्तरं तत्तत् साधयिष्यति।

(शिवः अन्तर्दधाति। शिवगुरुः आर्यांबा च उद्बुध्य परितः पश्यतः)

शिवगुरुः — आर्ये! सिद्धो नो मनोरथः। दिष्टचा पितृणां ऋणान्मुक्तौ। कुलोचितः पुत्रो जनिष्यते। तथा शिवोऽनुजग्राह स्वप्ने। तत्तथ्यमेव भवेत्।

आर्या — तथैव। आवां कृतकृत्यौ। (निर्गच्छतः)

## द्वितीयं दृश्यम्

(शङ्करः ब्रह्मचारी गुरुकुले वसति । गुरुणा अनुशिष्टः भैक्ष्यं चरति । देवीं स्तुवन् ब्राह्मणस्य गृहद्वारमुपागच्छति ।)

शङ्करः — (गायति)

कदा वा भवत्पादपोतेन तूर्णं भवांभोधिमुत्तीर्य पूर्णान्तरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौ समालोक्य लोकं कथं पर्युदास्से ॥

शरेष्वेव नासा धनुष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे ।
त्वगेषा भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरंब त्वयि स्यात् ॥

(गृहद्वारे तिष्ठन्) अंब ! भिक्षां देहि !

गृहिणी — (गृहान्निस्सरन्ती) अहो ! शिवा आकृतिः । मधुरं गानम् । विधिना अहं वञ्चिता । वटवे किं दद्याम् ? अपरिग्रहस्य अयाचकस्य उञ्छेन वर्तमानस्य पत्नी महाभागैवाहम् । परं अयं अंबेत्याह्वयति । भिक्षां याचते । अकिञ्चना किं वा दद्याम् ? (विचिन्त्य) वटो ! क्षणं तिष्ठ । इत एषा आगतास्मि । [गृहान्तः गत्वा शुष्कमामलकं आदाय बहिरागच्छन्ती] वटो ! प्रसीद ! इदमामलकं गृहाण । (साश्रुः वटवे आमलकं ददाति)

शङ्करः — [गृहीत्वा] अंब ! प्रेम्णा दत्तं इदं अनर्घं अक्षय्यं च । कुतः शोचसि ?

गृहिणी — दरिद्रेति न शोचामि । शोचामि भिक्षां न ददामीति । पूर्वजन्मनि दुष्कृतं बहु मया ।

शङ्करः — अंब ! अंब ! मा शुचः । मातरं लक्ष्मीं उपतिष्ठे । दयते सा दीनेषु । (साञ्जलिः)

अंगं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥

दद्यात् दयानुपवनो द्रविणांबुधारां अस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे ।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥

(लक्ष्मीः सन्निधत्ते)

शङ्करः — [प्रणमन्]

भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः ॥

लक्ष्मीः — वत्स ! जाने तव हृदयम् । परमेषा अकृतपुण्या । किं कुर्याम् ?

शङ्करः — देवि ! यद्यहं दयनीयः, तदनुगृह्णातु । तस्याः सर्वस्वं इदं आमलकं अधुना । तन्मह्यं अर्पितवती । सर्वस्वार्पणं वटवे .... महते पुण्याय । सद्यः फलति किल । अथवा किमनया हेतुचिन्तनया । कर्तुमकर्तुं अन्यथाकर्तुं प्रभवति भवती । प्रसीद मातः । करुणापूरतरङ्गितैः अपांगैः एनां कटाक्षय ।

लक्ष्मीः — वत्स ! तथाऽस्तु । (आकाशात्स्वर्णवर्षः)

शङ्करः — (देवीं प्रणम्य)

संपत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये ॥

(जवनिका पतति)

तृतीयं दृश्यम्

(कालट्यां अग्रहारः । द्वौ बालकौ मार्गे संभाषेते । )

अभिरामः — अयि ! कुतो वेगेनागच्छसि? अपि कुशलम्?

प्रकाशः — कुशलमेव । कदा समागतः ? शृणु आश्चर्यमिदं वृत्तम् । अद्य प्रातः शङ्करः मात्रा सह नदीं गतवान् । सा वृद्धा गन्तुमशक्ता मध्येमार्गं भूमौ उपविवेश । किं ब्रवीमि ! क्लान्तां मातरं दृष्ट्वा शङ्करेण नदी प्रार्थिता । सा सद्यः तद्गृहाभ्याशमेव आगता ।

अभिरामः — एवं वा? अद्भुतं नु? अधुना वृद्धा कथमास्ते ?

प्रकाशः — शृणु ! वृद्धा स्नात्वा तीरं उपगता । शङ्करस्तां सुखं उपवेश्य स्नानाय गतः । तावता ग्राहः कश्चन तस्य पादावग्रहीत् ।

अभिरामः — ग्राहो वा? पूर्णायां ग्राहो वा? अश्रुतपूर्वमिदम्। शङ्करः कुत्र?

प्रकाशः — शङ्करः उच्चैः मातरमाह्वयत्। अंब! ग्राहो मां गृहीतवान्। मृत्युः आसन्नः। किं करवाणि? दुर्मरणं जायेत। अंब! सपदि संन्यासाय अनुमतिं देहि। संन्यासो द्वितीयं जन्म। कदाचित् जीवेयमपि इति।

अभिरामः — किं मात्रा अनुमतिः दत्ता?

प्रकाशः — का अन्या गतिः? शङ्करो जीवेदपि इति आशया सा अन्वमन्यत।

अभिरामः — हन्त! अचिन्त्यमिदम्। किं स नदीगत एव संन्यस्तः?

प्रकाशः — तथैव। मनः संयम्य किमपि जजाप। सर्वभूतेभ्यो मत्तः अभयं इति उच्चैराश्रावयत्। संन्यस्तोऽहं इति अवदत्।

अभिरामः — ततः किमभवत्?

प्रकाशः — रोमहर्षणं किमपि संपन्नम्। सपदि शङ्करो ग्राहान्मुक्तः तीरं आगच्छत्। मातरं प्राणमत्। क्षणार्धेन सर्वं संपन्नम्। विस्मयाविष्टोऽहं ग्रामीणेभ्यो निवेदयितुं त्वरे। यद्युत्सुकः, त्वमपि तत्र गत्वा तौ पश्य।

(निष्क्रान्तौ)

## चतुर्थं दृश्यम्

(पूर्णानदीतटे आर्यांबा शङ्करश्च।)

आर्या — वत्स! गृहं गच्छावः। दिष्टया ग्राहात् विमुक्तोऽसि। दिष्टया अपमृत्युः अपगतः। मांगलिकं किमपि ते विदध्याम्। आगच्छ।

शङ्करः — अंब! न मे गृहे किमपि। संन्यासाय कृतः सङ्कल्पः। यदहरेव विरजेत्, तदहरेव हि प्रव्रजेत्। अनुजानीहि गमनाय।

आर्या — वत्स! किं कुर्वे? अनपाश्रया अहम्।

शङ्करः — न न। बन्धवः सन्ति। संपन्नां त्वां ते रक्षेयुः। यत्रसायंगृहो यतिरस्मि। किं कुर्याम्?

आर्या — वत्स! शृणु! वृषाचलेशितुः कृपया लब्धोऽसि। त्वामुपनीय वेदानध्यापयितुं इच्छन् तव पिता अकस्मात् दिष्टान्तमवाप। त्वां अग्रे पश्यन्ती तमशनिपातं कथमपि सोढवती। त्वयि गुरुकुलं गते त्वत्समागमप्रत्याशया जीवितं धृतवती। त्वयि नक्रेण गृहीते, क्षणमभवं मूढा। ततो यत्संवृत्तं तन्न स्मरामि।

शङ्करः — अंब! मया प्रार्थिता संन्यासाश्रमस्वीकरणे मामनुमतवती।

आर्या — तथा नु? त्वं किमप्यवदः। अहं किमपि प्रत्यवदम्। हं हो! स्मरामीव तद्वृत्तम्। कष्टं भोः। किं इतो मे जीवितेन। स्वप्नायितं सर्वम्। अस्तु। अहं ते माता किल? किमपि प्रार्थये? संविदध्या वा?

शङ्करः — मातः! विधेयं अनुशाधि। संन्यासिना कर्तुमर्हं तदवश्यं करवाणि।

आर्या — बाल! न जाने कर्तुमर्हं न वा। मम देहावसानसमये सन्निदध्याः। त्वज्जनयितुरस्य शरीरस्य विधिवत्संस्कारं कारय। इयदेव।

शङ्करः — अंब! स्ववशा अवशा वा देहान्ते मां स्मर। सन्निधाय, कर्तव्यं शतगुणं निर्वक्ष्यामि।

आर्या — दिष्टया अहं पुत्रवती। दिष्टया मे सफलं जन्म।

शङ्करः — अंब! वरदो गोविन्दो निकटे कृतालयः। तं भज भजनीयम्। तन्नामानि कीर्तय। (गायति)

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम्।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥

कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥

(मातरं प्रदक्षिणीकुर्वन् शङ्करः उत्तरां दिशं प्रति प्रतिष्ठते। माता स्तब्धा तं पश्यन्ती तिष्ठति।)

पञ्चमं दृश्यम्

(नर्मदानदीतटे ऋक्षपादाख्यं गिरिशिखरम्। तत्र गुहायां गोविन्द-भगवत्पादाः समाधिमास्थिताः। गुहाद्वारे शङ्करः। कश्चन शिष्यः द्वारं रक्षति।)

शिष्यः — महात्मन् कुतो भवान्?

शङ्करः — नाम्ना शङ्करोऽहम्। कालटयाः समागतः। मात्रा अभ्यनुज्ञातः प्रव्रजितः गुरुमन्विष्यन् दूरादस्मि समागतः। श्रुतं – शिवो गुरूणां गुरुः। ततः प्रवृत्ता महती गुरुपरंपरा श्रीगौडपादान्ता। तेषां अन्तेवासिनो गोविन्दभगवत्पादाः अत्र वर्तन्त इति। तानुपसदितुमिच्छामि।

शिष्यः — उत्कूलो नर्मदायाः प्रवाहः। कथमागतो भवान्।

शङ्करः — आगच्छतो मम मार्गं नर्मदा न्यरुणत्। गुरूणां चरणौ अन्वस्मरम्। क्षणात्प्रवाहः शान्तः कमण्डलुग्राह्यः।

शिष्यः — एवं वा? अमेयो हि गुरूणां प्रभावः। अयं समाधिस्थो गुरुः। इत एव तमुपतिष्ठतां भवान्।

शङ्करः — जगज्जनिस्थेमलयालयाभ्यां अगण्यपुण्योदयभाविताभ्याम्।
त्रयीशिरोजातनिवेदिताभ्यां नमो नमः श्रीगुरुपादुकाभ्याम्॥
स्वामिन्नमस्ते नतलोकबन्धो कारुण्यसिन्धो पतितं भवाब्धौ।
मामुद्धरात्मीयकटाक्षदृष्टया ऋज्व्यातिकारुण्यसुधाभिवृष्टया॥

(इति गुहां प्रणम्योत्थितः)

समाधेरुपरतं गुरुं दिदृक्षुः अत्रैव तिष्ठामि।

(गुहातः श्रीगोविन्दभगवत्पादाः निर्गच्छन्ति। प्रणमन्तं शङ्करं आशिषा योजयन्ति।)

गोविन्दः — भद्र! कस्त्वम्?

शङ्करः — न भूमिर्न तोयं न तेजो न वायुः
न खं नेन्द्रियं वा न तेषां समूहः।
अनेकान्तिकत्वात्सुषुप्त्येकसिद्धः
तदेकोऽवशिष्टः शिवः केवलोऽहम्॥

गोविन्दः — धन्योऽसि । कृतकृत्योऽसि । पावितं ते कुलं त्वया ।

शङ्करः — गुरुदेव ! प्रणमामि । अनुग्राह्योऽयं जनः ब्रह्मविद्यया ।

गोविन्दः — अहो श्लाघ्योऽसि । अविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि । श्रुतिशिरःप्रतिपाद्यं तत्ते ब्रवीमि । (उपदिशति)

शङ्करः — धन्योऽहं, अनुगृहीतोऽहम् । (प्रणमति)

गोविन्दः — परमहंसोचितां चर्यामंगीकृत्य इहैव वस । चिदानन्दरूपः शिवोऽहं शिवोऽहमिति भावय । ब्रह्माहं इत्यनुभव । तत्र मार्गं दर्शयन्त्येता उपनिषदः । द्वैपायनप्रणीतानि ब्रह्मसूत्राणि च । महती नो गुरुपरंपरा, नारायणात् ब्रह्मा, ततो वसिष्ठः, ततः शक्तिः, ततः पराशरः, ततो व्यासः, ततः शुकः इति पितृपुत्रक्रमेण प्रवहन्ती ततः शुकात् मे गुरुचरणाः श्रीगौडपादाः, ततोऽहमिति गुरुशिष्यक्रमेण । गुरुभिः मह्यमुपदिष्टां तां परां विद्यां उपदिशामि । अधिगतां मननेन धारणया ध्यानेन समाधिना च स्थिरीकुरु ।

शङ्करः — धन्यो धन्योऽस्मि ।

गोविन्दः — भद्र ! अहमपि धन्यः । गौडपाद श्रीचरणेभ्यः एनां अध्यगाम् । ब्रह्मसूत्राणि लघ्वक्षराण्यपि गूढार्थानि । तानि भूयो विवृतिमपेक्षन्ते इति चिन्तयन्नासम् । कदाचित् मम परमेष्ठिगुरवः श्रीव्यासाचार्याः सन्निहिताः । तन्निकटे मया निवेदितमेतत् । ते मामवदन् — " तवैकः शिष्यो भविता । स त्वामन्विष्यन् त्वामुपगच्छेत् । त्वयोपदिष्टतत्त्वः स एषां सूत्राणां भाष्यं विधास्यति " इति । स एव त्वमसि । नर्मदेव तव कमण्डलुं, सर्वं तद्विपुलं ज्ञानं विज्ञानं साङ्ख्यं योगश्च त्वदीयां धियं प्रविशन्तु ।

शङ्करः — अनुगृहीतोऽस्मि ।

गोविन्दः — मत्तो गृहीतां ब्रह्मविद्यां यथावद्विचार्य बोधय अधिकारिणः शिष्यान् । अभिवर्धय एनां सन्ततिम् । सा परा आद्या देवता त्वां अनुगृह्णातु । त्वय्येनां ब्रह्मविद्यां प्रतिपाद्य निर्वृतो निर्भरो भवेयम् ॥

(जवनिका पतति)

षष्ठं दृश्यम्

(काशी । गङ्गायां स्नात्वा विश्वेशं प्रणम्य शिष्येण पद्मपादेन सह शङ्करः आगच्छति । मार्गे ।)

शङ्करः — वत्स सनन्दन ! प्रकृतिं जितवानसि । स्नातोऽहं वासोग्रहणाय त्वामाह्वयम् । विना विचारं गङ्गापूरे पदे निधायागतोऽसि । गङ्गा हि त्वां पद्महस्ता दधार । पद्मपादोऽसि । कुत आगतः?

पद्मपादः — चोलदेशे कावेरीतीरे लब्धजन्मा । श्रीशैले तपसा भगवन्तं नरसिंहं आराधयम् । तपसि स्थितं मां व्याधः कश्चन कुतः तपस्यसि इत्यपृच्छत्? नरसिंहदर्शनाय तप्यामीत्यवोचम् । ' न मया दृष्टः कश्चन तादृशः । यद्यस्ति तमानयेयं सायमेव ' इत्युक्त्वा वनं गतः । श्रद्धाजडः मयि प्रतीतः प्राणान्पणीकृत्य तं अन्वेष्टुं आरेभे । तस्य जडस्यापि श्रद्धया प्रसन्नः देवः स्वयमेव पुरतो भवन् वनलताभिः बन्धनमियाय । स तं मन्निकटे आनयत् ।

शङ्करः — अहो विचित्रा भगवतो लीला । वनचरस्य श्रद्धया तुतोष, न ते तपसा ।

पद्मपादः — वनचरस्य अक्षिगोचरः, न मे स्वरूपमदर्शयत् । भगवतैव अनुगृहीतं तत्रभवन्तं गुरुत्वेनोपसदितुम् ।

शङ्करः — अस्तु । सिध्येत्तव मनोरथः भगवतः कृपया । अहमपि गुरूणामाज्ञया शिष्यान्परिगृह्य अध्यात्मविद्यां तेभ्यः उपदेष्टुं वाराणसीमुपगतोऽस्मि । गच्छ पुरतः ।

(चाण्डालः पानपात्रधारी पुरतः आगच्छति)

पद्मपादः — चाण्डाल ! अपसर मार्गात् ।

(चाण्डालो न शृणोतीव । मद्यमत्तो मार्गं निरुणद्धि ।)

शङ्करः — अये ! गच्छ ! अपसर ! गच्छ !

चाण्डालः — गच्छ !! अपसर !! कः कं गन्तुं अपसर्तुमादिशति? कः कुतोऽपसरतु?

शङ्करः — त्वामेव वदावः । त्वं श्वपचोऽसि । अशुचिरसि ।

चाण्डालः — निपुणं वदसि । "असंगं अखण्डं अद्वितीयं अनवद्यं ब्रह्म । सर्वमिदं ब्रह्म" इति शुकवत् वाचा आम्रेडयसि । तयैव वाचा मां अपसारयसि । असंगं अनवद्यं च कथं अशुचि भवेत् ? अखण्डं अद्वितीयं च कथं स्थानात्स्थानं गच्छेत् ? मार्गादपसरेद्वा ?

शङ्करः — यावान् व्यवहारः तावान्भेदः । आवां व्यवहरावः । अतो वदामि गच्छेति ।

चाण्डालः — सत्यं वदसि । अस्तु । अहमपि व्यवहारविदेव । वद किं मे अन्नमयं शरीरं इतोऽन्यत्र गच्छतु उत चैतन्यम् ?

शङ्करः — (विस्मितः) किमाह भवान् ।

चाण्डालः — कोऽपसरतु । किं मदीयोऽन्नमयः कोशः त्वदीयादन्नमयात् कोशात् उत मम चैतन्यं तव चैतन्यात् । स्पष्टं वद ।

शङ्करः — सत्यं वदत्येषः । साक्षिचैतन्यं नित्यशुद्धम् । न क्वाप्यशुचि ।

चाण्डालः — अथ विप्रोऽहमित्यात्मानं श्वपच इति मां अवगच्छसि वा ?

शङ्करः — सर्वदा अशुचौ अन्नमये वपुषि हि विप्रोऽयं चाण्डालोऽयं इति भेदव्यवहारः । तर्हि निरर्थमपसरणम् । युष्मदस्मत्प्रत्ययगोचरं चिद्वस्तु सर्वगं, न तत् दुष्यति व्येति अपैति उपैति वा ।

चाण्डालः — गंगांबुनि चाण्डालघटीजले च समं सूर्यः प्रतिबिम्बितो भवति । त्वयि मयि सर्वत्र एकमेव चिद्वस्तु प्रतिभाति । वदाधुना किमहं अपसराणीति ।

शङ्करः — आत्मविद्वर ! त्वमेव मे गुरुः ।

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम् ।
इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

एष प्रणमामि ।

(चाण्डालं प्रणम्योत्थितः तं शिवं पश्यति ।)

शिवः — तत्वदृष्टया अहमेव त्वम् । गुरुवरेणोपदिष्टमर्थं शिष्येभ्यो वितर । व्यासप्रणीतसूत्राणां उपनिषदां च भाष्यं रचय । ततो गहनमात्मतत्वं सुबोधं भवतु । शिवास्ते पन्थानः सन्तु । (अन्तर्दधाति)

पद्मपादः — मध्याह्नसमयोऽत्येति । गङ्गामभियामः आह्निकं निर्वर्तयितुम् ।

शङ्करः — तथा (सर्वे निष्क्रान्ताः)

सप्तमं दृश्यम्

(काश्यां गङ्गातीरे उटजे)

शङ्करः — गर्भाष्टमे वयसि संन्यस्तम् । लब्धं द्वितीयं जन्म । आयुः द्विगुणितमिव । अचिरादवसानमेष्यति । गुरुकृपया अधिगता ब्रह्मविद्या । यथाधिगतं उपदिष्टं च तत्सर्वं, ग्रन्थारूढञ्च । पूर्णोस्मि कृतकृत्योऽस्मि ।

(पद्मपादादयः प्रविश्य अनुज्ञाताः यथास्थानं उपविशन्ति ।)

पद्मपादः — गुरो ! अधीते कश्चन संशयः । पुनर्विवरणं अपेक्षे । " तदन्तर-प्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् " इति सूत्रं यथावदगृही-तार्थम् । कृपया पुनर्विवरणीयमिति प्रार्थये ।

(एवं संवादं शृण्वन्निव वृद्धः कश्चन प्रविशति । शिष्यैर्दत्तासनः उपविशति)

वृद्धः — यतिवर ! ममापि तत्सूत्रं अस्पष्टार्थम् ।

शङ्करः — भगवन् ! मदीयं भाष्यमत्र सुस्पष्टम् । पश्यतु । (ताडपत्रं अर्पयति । वृद्धः सशिरश्चालं तत इतः पठति । सबाष्पं सानुमोदं हृदयेन उपगृह्य शङ्कराय प्रत्यर्पयति ।)

वृद्धः — सुस्पष्टा सरणिः । मधुरं निरूपणम् । गभीरं तलस्पर्शि चिन्तनम् । सभाजनीयो भवान् ।

पद्मपादः — (सहसोत्थाय) अहह अत्यद्भुतमिव पश्यामि । (हस्तौ शिरसि धृत्वा उच्चैः)

शङ्करः शङ्करः साक्षात् व्यासो नारायणः स्वयम्।
उभावेकत्र मिलितौ द्रष्टव्यं दृष्टमद्भुतम् ॥
(उभौ प्रणमति)

शङ्करः — (सहसोत्थाय प्रणमति)

ओं नमो भगवते सूत्रकाराय परापरगुरवे।
(शिष्याः सभक्तिप्रश्रयं प्रणमन्ति)

शङ्करः — भगवन् पूर्णकाम ! लोकहितं अनुध्यायता तत्रभवता वैदिकं वाङ्मयं चतुर्धा व्यस्तम्। पुराणादिषु धर्मा अनुशिष्टाः। अध्यात्मतत्वं सूत्रेषु संक्षिप्य सन्दृब्धम्। धन्योऽस्मि भवद्दर्शनेन। कृतकृत्योऽस्मि।

व्यासः — अवशिष्यते कर्तव्यं भवता।

शङ्करः — आदिश्यतां कर्तव्यम्।

व्यासः — गोविन्दस्याज्ञया सूत्राणां भाष्यं व्यधायि इति श्रुतं मया। तदेव द्रष्टुकाम इहागतोऽस्मि। दृष्टं द्रष्टव्यम्। लोकशङ्करः शङ्करोऽसि। जगद्गुरुरसि। अधुना अहमस्मि कृतार्थः। उदारेयं ते प्रवृत्तिः न इयता संपन्ना।

शङ्करः — भगवन् ! किमहं कुर्याम् ? अद्य मे वयः पूर्तिमेष्यति। तत् अनुगृह्णातु मां शिष्याणामेषां स्वीकरणेन, गुर्वाज्ञया प्रणीतानां ग्रन्थानां उपादानेन च। अनुज्ञातव्योऽस्मि।

व्यासः — शङ्कर ! जानामि तत्। अत एवागतोऽहम्। ब्रह्मणा पूर्वमेव अनुज्ञातोऽस्मि। ईश्वरो अनुगृह्णाति। षोडश वत्सरानायुः पुनः प्राप्स्यसि। वर्धतां ते शिष्यगणः। ब्रह्मविद्यामिमां शिष्यैः प्रशिष्यैश्च लोकहिताय प्रचारय। शान्तिरस्तु।

(जवनिका पतति)

अष्टमं दृश्यम्

(पद्मपादः सुरेश्वरश्च गुरोरागमनं प्रतीक्षमाणौ काञ्चीमार्गमध्ये तिष्ठतः।)

पद्मपादः — गुरोः अन्ते वसतां नः कालो महानतीतः। दिने दिने काचन अद्भुता वाचामगोचरा निष्ठा अनुभूयते। स्मरामि तं कालं — यदा मातरं तस्या देहावसानसमये द्रष्टुं कालटीं गतवान् गुरुः। तदा दशपञ्चदशदिनमात्रोऽपि विरहः अस्माकं दुस्सहोऽभूत्।

सुरेश्वरः — धन्यस्त्वम्। मत्तोऽप्यधिकं कालं गुरुशुश्रूषाभाग्यं प्राप्तोऽसि।

पद्मपादः — सत्यम्। कुमारिलभट्टपादान् द्रष्टुं प्रयागं गते गुरौ, मयाप्यनुयातम्। रुचिरतमा गुरुशुश्रूषा। त्रिवेण्यां स्नास्यतो गुरोः आत्मनो मातुः स्मरणेन नेत्रे बाष्पविकले अभवताम्।

सुरेश्वरः — ब्रह्मणि वर्तमानस्यापि मातुः स्मरणं वा? बाष्पस्रुतिर्वा?

पद्मपादः — मयाप्याशङ्कितं तथा। यतेरपि प्रसूर्वन्द्येति गुरुणा उत्तरितम्।

सुरेश्वरः — भट्टपादाः गुरुचरणान् अभ्यनन्दन्वा? मीमांसकपरिबृठास्ते।

पद्मपादः — अथ किम्? गुरुचरणसकाशात् ब्रह्मविद्यां अधीत्य भाष्यस्य वार्तिककरणायापि इच्छा तेषामासीत्। तदात्वे तुषाग्नि ते प्रविष्टाः। ततोऽसंपन्नं कामं भवान् शिष्यभावं प्राप्य पूरयेत् इत्याशंसामपि ते न्यवेदयन्।

सुरेश्वरः — तथा वा? गुरुचरणानामाज्ञया भट्टपादानां च समीहितं संपन्नमेव। गुरुचरणैरादिष्टः उपनिषदोर्भाष्यविवरणं कृतवानयं जनः। भवानपि तथैव सूत्रभाष्यविवरणं कृतवान्। अग्निना सन्दग्धे तस्मिन् गुरोः करुणा कमप्यंशं पुनः प्रकटितवती।

पद्मपादः — भगवतः त्रिलोचनस्य तृतीयं चक्षुरिव हस्तामलकोऽपि प्रज्ञानघनः अस्माकं सतीर्थ्यः। गुर्वनुग्रहः तेन अनीदृशः प्राप्तः। तदीयं आत्मनिवेदनं गुरुराजः स्वीयेन भाष्येण समलंकृतवान् किल।

सुरेश्वरः — सर्वेभ्योऽतिशेते गिरिः। यमधुना तोटकमाह्वयामः। तस्य गुरौ भक्तिः, तस्मिन् गुरोः वात्सल्यं इत्युभयं अदृष्टचरम्। कुतोऽप्यन्तर्विस्फुरन्ती तस्य गिरेः चिच्छक्तिः अन्तरमान्ती गुरोः करुणया नदीव प्रावहद्बहिः। अहो तद्गीतमाधुर्यम्!

" भव शङ्करदेशिक मे शरणम् । "

" रचयाखिलदर्शनतत्त्वविदम् । "

" कलयेश्वरजीवविवेकविदम् । "

" भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता । "

" अहिमांशुरिवात्र विभासि गुरो । "

" द्रुतमेव विधेहि कृपां सहजाम् । "

कियत् गभीरा विश्रान्ता सार्था हृद्या च प्रार्थना । स्वादं स्वादं माद्यामि । अन्यांद्विस्मरामि । तामेव गृणन्नासे ।

पद्मपादः — सनाथा वयम् । गुरुराजेन सह भारतीं भुवं त्रिः पर्यटद्भिः द्वादश ज्योतिर्लिङ्गक्षेत्राणि सेवितानि । नद्यो नदास्तीर्थानि च अवगाहितानि । सर्वं भगवतो लीला । सर्वं तदाज्ञया चेष्टते । तदेव परं ब्रह्म साधकानुग्रहार्थं धृतविविधनामरूपावस्थानं लोकं धर्मे नियमयति अनुगृह्णाति च । इति तत्साक्षात्कारः प्रापितो गुरुराजेन ।

सुरेश्वरः — गुरुराजः बदरिकाश्रमतः दक्षिणं भारतं प्रति निवर्तमानः ज्योतिर्नगरे ज्योतिष्मतीपीठं, द्वारकायां कालिकापीठं, जगन्नाथे विमलापीठं, श्रृङ्गगिरौ शारदापीठं च प्रकल्प्य धर्माचार्यत्वेन एकैकमस्मान् तेषु न्ययोजयत् । ततः त्वरया मोक्षपुरीष्वन्यतमां काञ्चीमभिप्रस्थितः केनापि कामेन । कमप्यन्यं आश्रवं प्रतीक्षमाणो धेनुरिव वत्सं वेगेन धावतीव । अतः किमप्यद्भुतं अनीदृशं अनिदंपूर्वं तत्र संभवेदिति कुतुकिनो वयमपि तमनुधावामः ।

(जवनिका पतति)

## नवमं दृश्यम्

(काञ्ची । कामाक्षीदेव्याः पुरतः सर्वज्ञपीठम् । वर्धनः तत्सुतः सर्वज्ञात्मा पद्मपादादयश्च भगवत्पादागमनं प्रतीक्षन्ते ।)

वर्धनः — सर्वज्ञात्मन् ! इदमेव तत्सर्वज्ञपीठम् । यः सर्वज्ञः स्वीयं सर्वज्ञत्वं निरूपयति स एवेदं आरोढुं प्रभवति । प्रचलिते वादप्रसंगे नानादेशागता विद्वांसः विजिताः भगवत्पादानां सर्वज्ञत्वं अङ्गीकृतवन्तः । अधुनापि तैर्विवदितुं ईहसे वा ?

सर्वज्ञः — तात ! यदर्थं मया तपस्तप्तं, तत् अद्य सिध्येत् ।

वर्धनः — वत्स ! आशैशवादप एव पिबसि । नान्यत् किमप्यश्नासि । न संभाषसे । नाधीषे किमपि । पृष्टः ओमिति वदसि । न जाने कथं विवदेः सर्वज्ञेनानेन यतिवरेण ? मया बहुधा निरुद्धोऽपि पुरतो यियाससि । किं कुर्याम् ! ईश एव वेत्ति ।

(शङ्करः प्रविशति)

शङ्करः — महोग्रा परा बिलवासिनी कामाक्षी मयि करुणया अद्य सौम्यतरा भूत्वा अनुगृह्णाति । पुरतः स्थिते चक्रराजे आत्मनः शक्तिं नियतवती सा । राजसेनो महीपतिः शिवकाञ्चीं विष्णुकाञ्चीं च नूत्नां रम्यां च निर्मितवान् । भव्या देव्याः स्वर्णमयी मूर्तिः सचामररमावाणीसव्य-दक्षिणसेविता निर्मिता आराधकानां मनो ह्लादयति । किमितः करणीयमत्र ?

सर्वे — सर्वज्ञपीठमधिरुह्य अस्माननुगृह्णन्तु गुरुवराः !
सर्वज्ञपीठमधिरुह्य अस्माननुगृह्णन्तु गुरुवराः !!

शङ्करः — देवी तथा आज्ञापयतीति मन्ये । (सर्वज्ञपीठमारुरुक्षति)

सर्वज्ञात्मा — मदर्थे एकः क्षणः । अहमस्मि ताम्रपर्णीतीरतः आगतः सर्वज्ञात्मा नाम्ना, अनुग्राह्येष्ववशिष्टः ।

शङ्करः — नितरां सर्वज्ञोऽसि धाम्ना नाम्ना च । श्रेयसा युज्यस्व । किं अपेक्षसे ?

सर्वज्ञात्मा — संप्रवृत्तं तद्द्वियसंवादं एकान्ततः श्रुतवानहम् । शान्ताः सर्वे संशयाः । प्रशान्तः समाहितोऽस्मि । शरणमुपगतोऽस्मि । अस्मिन्नमुष्मिश्च जन्मनि कृतं तपोऽद्य फलितं मन्ये । सर्वा आकांक्षाः शान्ताः । यद्यहमधिकारी, आश्रवेष्वन्यतमः करणीयः । (प्रणमति)

शङ्करः — भद्र ! पूर्वमेव स्वीकृतोऽसि । आगच्छ । गृहाणेमम् । (ब्रह्मोपदिशति) त्वामेवान्विष्यन् हिमगिरेः त्वरया काञ्चीमुपागतोऽहम् । कामाक्ष्याः पुरतः मदीयो गुरुः गुरुभरः त्वयि विन्यस्यते । सुरेश्वरस्त्वां पर्यवेक्षेत ।

सर्वज्ञात्मा — भूरिकरुणापदं लंभितः कृतार्थोऽस्मि ।

शङ्करः — अहमप्यस्मि कृतार्थः । कैलासादानीतेषु पञ्चसु चत्वारि लिङ्गानि तत्र तत्र प्रतिष्ठापितानि । योगेश्वरो योगलिङ्गमयः ईशः मया आराध्यमानोऽयम् । तमद्य प्रभृति त्वमाराधय । गुरुपीठमिदं कामकोटिपीठमधिवस ।

(शङ्करः सर्वज्ञपीठमधिरोहति)

पद्मपाद ! सुरेश्वर ! हस्तामलक ! तोटक ! सर्वे यूयं स्वस्वस्थानेषु नियोगमशून्यं कुरुत । शिष्याः ! सर्वे लोकशङ्करा भवत । आसेतोः आहिमाद्रेः विस्तृतमिदं धर्मराज्यं धर्मेण नयत । लोकहितमिमं उपदेशं उपदिशत उपनतेभ्यः ।

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
सद्विद्वानुपसृप्यतां प्रतिदिनं तत्पादुके सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
प्रारब्धं त्विह भुज्यतां अथ परब्रह्मात्मना स्थीयताम् ।

किमितः करणीयमस्ति —

देवि कामाक्षि !

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान्पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशीं
अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ॥

(श्रीशङ्करः ब्रह्म ध्यायन् तस्मिन् लीनो भवति । सर्वत्र जयघोषः)

स्वामिन् ! जय ! विजयी भव !

(आकाशे)

काञ्चीपुराभरण कामदकामकोटि-
पीठाभिषिक्तवरदेशिकसार्वभौम । जय विजयी भव !
सार्वज्ञशक्त्यधिगताखिलमन्त्रतन्त्र-
चक्रप्रतिष्ठितिविजृम्भित चातुरीक । स्वामिन् जय विजयी भव !
षण्मतप्रतिष्ठापकाचार्यवर्य जय विजयी भव !
श्रीमत्परमहंसपरिव्राजकाचार्यवर्य जय विजयी भव !
श्रीमच्छङ्करभगवत्पादाचार्य स्वामिन् जय विजयी भव !

(मङ्गलम्)

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥

**लघु नाटकं संपूर्णम्**



## कथापात्राणि

सूत्रधारः
शिवगुरुः
आर्याम्बा
वृषाचलेशः
बालः शङ्करः
गृहिणी
लक्ष्मीः
द्वौ कुमारौ – अभिरामः प्रकाशः
गोविन्दभगवत्पादाः
तेषां शिष्यः
शङ्करभगवत्पादाः
पद्मपादः
चाण्डालः विश्वेश्वरः
व्यासः
सुरेश्वरः
वर्धनः
सर्वज्ञात्मा

स्थानं – वृषाचलक्षेत्रं, कालट्यां अग्रहारः, पूर्णानदीतटम् , गोविन्दभगवत्पादगुहा, काशीवीथी, शङ्कराश्रमः, कामाक्ष्यालयः ।

---



श्री अखिलाण्डेश्वरी – ताटङ्क प्रतिष्ठामहोत्सवावसरे
श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु
श्री जयेन्द्रसरस्वती श्रीपादानां
श्री शङ्करविजयेन्द्रसरस्वती श्रीपादानां च
श्रीचरणेषु सविनयं उपह्रियते